# भज यतिराजम्

{॥ भज यतिराजम् ॥}

भज यतिराजं भज यतिराजं भज यतिराजं भवभीरो ।

भज यतिराजं भज यतिराजं भज यतिराजं भवभीरो ॥ भज यतिराजं ...

श्रीरङ्गेशयजयाश्रयकेतुः श्रितजनसंरक्षणजीवातुः ।

भवभयजलधेरेव हि सेतुः पद्मानेतुः प्रणतौ हेतुः ॥ १॥ भज यतिराजं ...

आदौ जगदाधारः शेषः तदनु सुमित्रानन्दनवेषः ।

तदुपरि धृतहलमुसलविशेषः तदनन्तरमभवद्गुरुरेषः ॥ २॥ भज यतिराजं ...

भुङ्क्ते वैषयिकं सुखमन्यः प्रचकास्त्येव अनश्नन्नन्यः ।

इति यस्तत्वं प्राह वदान्यः तस्मादधिकः को नु वदान्यः ॥ ३॥ भज यतिराजं ...

नष्टे नयने कस्यालोकः चित्ते मत्ते कस्य विवेकः ।

क्षीणे पुण्ये कः सुरलोकः कामे धूते कस्तव शोकः ॥ ४॥ भज यतिराजं ...

निशि वनितासुखनिद्रालोलः प्रातः परदूषणपटुशीलः ।

अन्तर्याति निजायुष्कालः किं जानाति नरः पशुलीलः ॥ ५॥ भज यतिराजं ...

केचिल्लीलालालसगतयः केचिद्बालालालितरतयः ।

केचिद्दोलायितहमतयः केऽपि न सन्त्यर्चितयतिपतयः ॥ ६॥ भज यतिराजं ...

यावानबलो जरया देहः तावान् प्रबलो विषये मोहः ।

वचसि विरक्तिः श्रुतिपरिवाहः मनसि हितस्त्वपरोऽपि विवाहः ॥ ७॥ भज यतिराजं ...

कलुषनिकायं ललनाकायं पश्यन्मुह्यसि सायं सायम् ।

जहि जहि हेयं तद्व्यवसायं स्मर निरपायं चरमोपायम् ॥ ८॥ भज यतिराजं ...

रात्रिंदिवमपि भिक्षाचर्या कलहायैवागच्छति भार्या ।

मध्ये बान्धवसेवा कार्या कथय कदा तव देवसपर्या ॥ ९॥ भज यतिराजं ...

अन्धं नयनं भूमौ शयनं मन्दं वचनं मलिनं वदनम् ।

तस्मिन् काले गोप्तुं सदनं वाञ्छसि दत्ततनूजानयनम् ॥ १०॥ भज यतिराजं ...

तालच्छदकृतकुब्जकुटीरः प्रतिगृहसन्ध्याकबलाहारः ।

विविधपटच्चरभारः क्रूरः सोऽपि विधातृसमाहङ्कारः ॥ ११॥ भज यतिराजं ...

मन्त्रद्रव्यविशुद्धो यागः सर्वारम्भविरागस्त्यागः ।

कर्तुं शक्यो न कलौ योगः किन्तु यतीशगुणामृतभोगः ॥ १२॥ भज यतिराजं ...

उपरि महोपलवर्षासारो मार्गे कण्टककर्दमपूरः ।

कक्षे भारः शिरसि किशोरः सुखयति घोरः कं संसारः ॥ १३॥ भज यतिराजं ...

भजसि वृथा विषयेषु दुराशां विविधविचित्रमनोरथपाशाम् ।

कियदपि लभसे न हि तत्रैकं किन्तु व्रजसि महान्तं शोकम् ॥ १४॥ भज यतिराजं ...

कश्चन लोके करपुटपात्रः पातुं सुतमाश्रितमठसत्रः ।

तस्मिन्वृद्धे तं सकलत्रः शपति हि रण्डासुत इति पुत्रः ॥ १५॥ भज यतिराजं ...

मनुजपतिं वा दिगधिपतिं वा जलजभवं वा जगदधिपं वा ।

ममताहङ्कृतिमलिनो लोको निन्दति निन्दति निन्दत्येव ॥ १६॥ भज यतिराजं ...

पापहतो वा पुण्ययुतो वा सुरनरतिर्यग्जातिगतो वा ।

रामानुजपदतीर्थान्मुक्तिं विन्दति विन्दति विन्दत्येव ॥ १७॥ भज यतिराजं ...

गुणगुणिनोर्भेदः किल नित्यः चिदचिद्द्वयपरभेदः सत्यः ।

तद्द्वयदेहो हरिरिति तत्त्वं पश्य विशिष्टाद्वैतं तत्त्वं ॥ १८॥ भज यतिराजं ...

यतिपतिपदजलगणिकासेकः चतुरक्षरपदयुग्मविवेकः ।

यस्य तु सालनगर्यवलोकः तस्य पदेन हतो यमलोकः ॥ १९॥ भज यतिराजं ...

चिन्तय सर्वं चिदचिद्रूपं तनुरिति तस्य हरेरनुरूपम् ।

तस्मात् कस्मिन्कलयसि कोपं पश्चाद्व्रजसि दुरापं तापम् ॥ २०॥ भज यतिराजं ...

यश्चतुरक्षरमन्त्ररहस्यं वेद तमेव वृणीहि सदस्यम् ।

तच्चरणद्वयदास्यमुपास्यं तद्विपरीतं मतमपहास्यम् ॥ २१॥ भज यतिराजं ...

वैष्णवकुलगुणदूषणचिन्तां मा कुरु निजकुलशीलाहन्ताम् ।
यतिपतिरेव हि गुरुरेतेषामिति जानीहि महत्वं तेषाम् ॥ २२॥ भज यतिराजं ...

सुमसुकुमारं शोभितमारं रतिसुखसारं युवतिशरीरम् ।
गतजीवितमतिघोरविकारं दृष्ट्वा गच्छसि दूरं दूरम् ॥ २३॥ भज यतिराजं ...

विद्यानिपुणा वयमित्यन्ये हृद्या धनिनो वयमित्यन्ये ।
सत्कुलजाता वयमित्यन्ये तेषु कलिं परिपूर्णं मन्ये ॥ २४॥ भज यतिराजं ...

यमकिङ्करकरमूले शूले पतदभियाति हि फाले फाले ।
दहति तनुं प्रतिकूले काले कं रमयसि तत्काले बाले ॥ २५॥ भज यतिराजं ...

नरवाहनगजतुरगारूङ्ःआः नारीसुतपोषणगुणमूढाः ।
नानारञ्जकविद्याप्रौढाः नागरिकाः किं यतयो मूढाः ॥ २६॥ भज यतिराजं ...

यस्य मुखस्था यतिपतिसूक्तिः तस्य करस्था विलसति मुक्तिः ।
नरके पतितं नवनवयुक्तिः नहि रक्षति सामान्यनिरुक्तिः ॥ २७॥ भज यतिराजं ...

श्रुतिशिरसामत्यन्तविदूष्यं सूत्रानभिमतमतिवैदुष्यम् ।
प्रथमम् मङ्गलमनृतविशेष्यं प्रलपसि किं प्राकृतकृतभाष्यं ॥ २८॥ भज यतिराजं ...

तस्करजारविदूषकधूर्ता मस्करिमौनिदिगम्बरवृत्ताः ।

गुप्तधनीकृत धनमदमत्ताः गुरवः किं परवञ्चकचित्ताः ॥ २९॥ भज यतिराजं ...

कान्तिमतीसुकुमारकुमारं केशवयज्वकिशोरमुदारम् । यज्व पाठभेद सिंह

रामानुजमहिराडवतारं मूकान्धानपि मोक्षयितारम् ॥ ३०॥ भज यतिराजं ...

काषायाम्बरकवचितगात्रं कलितकमण्डलुदण्डपवित्रं ।

विधृतशिखाहरिणाजिनसूत्रं व्याख्यातद्वैपायनसूत्रम् ॥ ३१॥ भज यतिराजं ...

यामुनपूर्णकृपोज्ज्वलगात्रं रामाब्जाक्षमुनीक्षणपात्रम् ।

कोमलशठरिपुपदयुगमात्रं श्रीमाधवसेनापतिमित्रम् ॥ ३२॥ भज यतिराजं ...

सालग्रामे सर्वहितार्थं येनास्थापि गुरोः पदतीर्थम् ।

तत्कुलदैवतहितपुरुषार्थं सकलोपायाधिकचरमार्थम् ॥ ३३॥ भज यतिराजं ...

प्रवचनसक्तः प्रज्ञायुक्तः परहितसक्तः परमविरक्तः ।

नानादैवतभक्त्या युक्तः न भवति मुक्तो भवति न मुक्तः ॥ ३४॥ भज यतिराजं ...

सन्त्यज सकलमुपायाचरणं व्रज रामानुजचरनौ शरणाम् ।

पश्यसि तमसः पारं नित्यं सत्यं सत्यं पुनरपि सत्यम्॥ ३५॥ भज यतिराजं ...

भगवद्रामानुजषट्त्रिंशः सालग्रामगुरूत्तमवंश्यः ।

कौण्डिन्यः कविराह पवित्रं रङ्गार्यो यतिराजस्तोत्रम् ॥ ३६॥ भज यतिराजं ...

See the translation (except 25) at

http://antaryami.net/darpanam/2013/05/12/bhaja-yathiraja-sthothram/

Proofread by PSA Easwaran psaeaswaran at gmail.com

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org


Bhaja Yatirajam Lyrics in Devanagari PDF
% File name : bhajayatirAjam.itx
% Location : doc_deities_misc
% Language : Sanskrit
% Subject : philosophy/hinduism/religion
% Proofread by : PSA Easwaran psaeaswaran at gmail.com
% Translated by : http://antaryami.net/darpanam/2013/05/12/bhaja-yathiraja-sthothram/
% Description-comments : Ramanuja Sampradaya
% Latest update : September 16, 2013
% Send corrections to : Sanskrit@cheerful.com
% Site access : http://sanskritdocuments.org
%